ताड्यमानं प्रदेशं विधत्ते-

"शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते" [ब्रा० का० १ प्र० ३ अ० ७] इति ।

चतुर्दिक्षु हननं विधत्ते-

" दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

अमृतमसीति । कल्पः-" अत्रास्मै मत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानः हिरण्यं दक्षिणं पादः हिरण्य उपावरोहयति अमृतमसीति, पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने " इति ।

हे हिरण्य त्वं विनाशरहितमसि। नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्वि-नश्यति । हे बस्ताजिन त्वं पुष्टिरसि संवत्सरे बह्वपत्योत्पादकत्वात् । एतदेवा-भिप्रेत्य प्रजननमसीत्युच्यते ।

हिरण्येऽवरोहं विधातुं प्रस्तौति-

" ईश्वरो वा एष पराङ्प्रदघः । यो यूपः रोहति " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

यूपमारूढो यजमानः पराङ्भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विना-शयितुमीश्वरः समर्थो भवति । अथवा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरा वर्तेत इत्यर्थः ।

विधत्ते-

" हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतः सुवर्गो लोकः अमृत एव सुवर्गे लोके प्रतितिष्ठति " [ब्रा० का० १ प्र० ३ अ० ७] इति

हिरण्यस्य परिमाणं विधत्ते-

" शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतिति ष्ठति " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रियाणां मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ।

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति-